"गृध्यन्ति, ते श्वानो न मनुष्यकाः ॥ ११ ॥" तस्मादेवंविधं नूनमन्येषामपि देहिनाम् । चरितं यैः कृतं पापैर्गणिकाव्यसने मनः ॥ १२ ॥
प्रकर्षेणोक्तं—सलगेतमास्त्यत्र सन्देहः, ततोऽतिवाहितस्ताभ्यां क्वचिद्देवमन्दिरे रात्रिशेषः—अत्रान्तरे गलत्तारा, कथितध्वान्तकेशिका ।
नभःश्रीः पाण्डुरा जाता, रोगाघ्रातेव बालिका ॥ १ ॥ आददानः श्रियं तस्या, निजवीर्येण भास्करः । कारुण्यादिव संजातः, सप्रभावो
भियम्वरः ॥ २ ॥ ततोऽरुणप्रभाभिन्ने, पूर्वे गगनमण्डले । जाते रक्तेऽभ्रसङ्घाते, गतच्छाये निशाकरे ॥ ३ ॥ तस्करेषु निलीनेषु, ल-
पत्सु कृकवाकुषु । कौशिकेषु च मूकेषु, कुररेषु विराविषु ॥ ४ ॥ स्वकर्मधर्मव्यापारच्छलेनेव कृतादरम् । सर्वं तदा जगज्जातमारोग्यार्थं
नभःश्रियः ॥ ५ ॥ त्रिभिर्विशेषकम् । अथोदिते सहस्रांशौ, प्रबुद्धे कमलाकरे । सङ्गमे चक्रवाकानां, जने धर्मपरायणे ॥ ६ ॥ विमर्शः
प्राह ते वत्स!, महदत्र कुतूहलम् । भवचक्रं च विस्तीर्णं, नानावृत्तान्तसङ्कुलम् ॥ ७ ॥ स्तोककालावधिः शेषो, द्रष्टव्यं बहु तिष्ठति ।
न शक्यते ततः कर्तुमेकैकस्थानवीक्षणम् ॥ ८ ॥ तदिदं वचनं तात!, मामकीनं समाचर । आकालहीनं ते येन, पूर्यते तत्कुतूहलम् ॥९॥
य एष दृश्यते तुङ्गः, शुभ्रः स्फटिकनिर्मलः । महाप्रसादो विस्तीर्णो, विवेको नाम पर्वतः ॥ १० ॥ आरूढैर्दृश्यते भद्र!, समस्तमिह
पर्वते । इदं विचित्रवृत्तान्तं, भवचक्रं महापुरम् ॥ ११ ॥ तदत्रारुह्यतां तात!, निपुणं च विलोक्यताम् । यत्र न जायते सम्यक्, पृ-
च्छ्यतामेव तज्जनः ॥ १२ ॥ यतोऽत्राखिलवृत्तान्ते, विदिते नगरे तव । पश्चादपि न जायेत, चित्तौत्सुक्यं कदाचन ॥ १३ ॥ एवं
भवतु तेनोक्ते, समारूढौ च पर्वते । अथ तत्र विवेकाख्ये, तुष्टौ स्वस्त्रीयमातुलौ ॥ १४ ॥ प्रकर्षः प्राह मामैष, रमणीयो महागिरिः ।
दृश्यते सर्वतः सर्वं, भवचक्रं मयाऽधुना ॥ १५ ॥ किं तु देवकुले माम!, नग्नो ध्यानपरायणः । वेष्टितः पुरुषैर्दीनैः, क्षामो मुत्कलके-
शिकः ॥ १६ ॥ नंष्टुकामो दिगालोकी, सेटिकाशुभ्रहस्तकः । दृश्यते पुरुषः कोऽयं, पिशाचाकारधारकः? ॥ १७ ॥ विमर्शेनोदितं

विवेक-
पर्वतः

द्यूतफलं

वत्स!, विख्यातातुलसंपदः । **कुबेरसार्थवाहस्य**, सूनुरेष **कपोतकः** ॥ १८ ॥ **धनेश्वर** इति ख्यातमभिधानं प्रतिष्ठितम् । अस्य पूर्वगुणैः पश्चादाहूतोऽयं कपोतकः ॥ १९ ॥ अनर्घ्यरत्नकोटीभिः, पूरितं पापकर्मणा । अनेनापि पितुर्गेहं, श्मशानसदृशं कृतम् ॥ २० ॥ द्यूतेषु रतचित्तोऽयं, न चेतयति किञ्चन । निर्वाहिते धने स्वीये, द्यूतार्थं चौरिकापरः ॥ २१ ॥ चौर्यं पुरेऽत्र कुर्वाणो, भूरिवाराः कदर्थितः । राज्ञाऽसौ मान्यपुत्रत्वात्केवलं न विनाशितः ॥ २२ ॥ अद्य रात्रौ पुनः सर्वं, हारितं कर्पटादिकम् । ततो व्यसनतप्तेन, मस्तकेन कृतः पणः ॥ २३ ॥ एभिरेष महाधूर्तैर्वराकैः कितवैर्जितः । शिरोऽपि लातुमिच्छद्भिरधुनैवं विनाट्यते ॥ २४ ॥ नंष्टुमेभ्यो न शक्नोति, स्वपापभरपूरितः । क्षुद्रैर्वितर्ककल्लोलैः, केवलं परितप्यते ॥ २५ ॥ प्रकर्षः प्राह न ज्ञातं, किमनेन तपस्विना । **द्यूतं हि देहिनां लोके, थर्वानर्थविधायकम्?** ॥ २६ ॥ धनक्षयकरं निन्द्यं, कुलशीलविदूषणम् । प्रसूतिः सर्वपापानां, लोके लाघवकारणम् ॥ २७ ॥ संक्लिष्टचेतसो मूलमविश्वासकरं परम् । पापैः प्रवर्तितं द्यूतं, किमनेन न लक्षितम्? ॥ २८ ॥ विमर्शेनोदितं वत्स!, महामोहमहीपतेः । वराकः किं करोत्येष, यो वशः सैन्यवर्तिनः ॥ २९ ॥ यतः—महामोहहता येऽत्र, विशेषेण नराधमाः । द्यूते त एव वर्तन्ते, प्राप्नुवन्ति च तत्फलम् ॥ ३० ॥ यावच्च कथयत्येवं, विमर्शः किल चेष्टितम् । तावत्त्रोटितमेवोच्चैः, कितवैस्तस्य मस्तकम् ॥ ३१ ॥ प्रकर्षः प्राह मामेदं!, महानर्थविधायकम् । रमन्ते द्यूतमत्रैव, तेषामेवंविधा गतिः ॥ ३२ ॥ तं मातुलोऽब्रवीद्भद्र!, सम्यक् संलक्षितं त्वया । **न द्यूते रक्तचित्तानां, सुखमत्र परत्र वा** ॥ ३३ ॥ अत्रान्तरे महारण्ये, निपपात कथञ्चन । दृष्टिः प्रकर्षसंज्ञस्य, नीलाब्जदललासिनी ॥३४॥ ततश्च तन्मुखं हस्तं, कृत्वा स प्राह मातुलम् । क एष तुरगारूढः, प्रस्विन्नः श्रमपीडितः ॥ ३५ ॥ उद्गीर्णहेतिः पापात्मा, जीवमारणतत्परः । स्वयं दुःखपरीतोऽपि, दुःखदोऽरण्यदेहिनाम् ॥ ३६ ॥ मध्याह्नेऽपि पिपासार्तो, बुभुक्षाक्षामकुक्षिकः । जम्बुकं पुरतः कृत्वा, प्रधा-

मृगया-
व्यसनफलं

रमुपलभ्यते ॥३७॥ त्रिभिर्विशेषकम् । विमर्शेनोक्तम्—अत्रैव मानवावासे, विद्यतेऽवान्तरं पुरम् । ललितं नाम तस्यायं, राजा ललनना-मकः ॥ ३८ ॥ मृगयाव्यसने सक्तो, न लक्षयति किञ्चन । अयमत्र महारण्ये, तिष्ठत्येव दिवानिशम् ॥ ३९ ॥ सामन्तैः स्वजनैर्लोकै-र्मया मन्त्रिमहत्तमैः । वार्यमाणोऽपि नैवास्ते, मांसखादनलालसः ॥ ४० ॥ सीदन्ति राज्यकार्याणि, विरक्तं राजमण्डलम् । ततस्तं ता-दृशं वीक्ष्य, निन्दितं राज्यचिन्तकैः ॥ ४१ ॥ नोचितो राज्यपद्माया, ललनोऽयं दुरात्मकः । ततः पुत्रं व्यवस्थाप्य, राज्ये गेहाद्बहिष्कृतः ॥ ४२ ॥ तथाप्याखेटके रक्तो, मांसलोलो नराधमः । एकाकी दुःखितोऽरण्ये, नित्यमास्ते पिशाचवत् ॥४३॥ इह च वत्स!—"परमा-"रितजीवानां, पिशितं योऽपि खादति । इहामुत्र च दुःखानां, पद्धतेः सोऽपि भाजनम् ॥ ४४ ॥ यस्तु क्रूरो महापापः, स्वयमेव निकृ-"न्तति । स्फुरन्तं जीवसङ्घातं, तस्य मांसं च खादति ॥ ४५ ॥ तस्येह यदि दुःखानि, भवन्त्येवंविधानि भोः! । परत्र नरके पातो, "वत्स! किं तत्र कौतुकम् ?॥४६॥ युग्मम् । बीभत्समशुचेः पिण्डो, निन्द्यं रोगनिबन्धनम् । कृमिजालोल्बणं मांसं, भक्षयन्तीह राक्षसाः "॥४७॥ यैस्त्विदं धर्मबुद्ध्यैव, भक्ष्यते स्वर्गकाम्यया । कालकूटविषं नूनमश्नुते जीवितार्थिनः ॥ ४८ ॥ अहिंसा परमो धर्मः, स कुतो "मांसभक्षणे ?। अथ हिंसा भवेद्धर्मः, स्यादग्निर्हिमशीतलः ॥ ४९ ॥ किमत्र बहुना ?—धर्मार्थं रसगृद्ध्या वा, मांसं खादन्ति ये नराः । "निघ्नन्ति प्राणिनो वा ते, पच्यन्ते नरकाग्निना ॥ ५० ॥ अन्यच्च—यथा गोमायुघाताय, ताम्यत्येष निरर्थकम् । आखेटके रतात्मानस्त-थैवान्येऽपि जन्तवः ॥ ५१ ॥ यावच्च वर्णयत्येवं, विमर्शस्तस्य चेष्टितम् । तावल्ललनवृत्तान्तो, यो जातस्तं निबोधत ॥ ५२ ॥ स जम्बु-कविनाशार्थं, धावन्नश्वेन दुस्तरे । सतुरङ्गो महागर्ते, पतितोऽधोमुखस्तले ॥ ५३ ॥ ततः संचूर्णिताङ्गोऽसौ, क्षुद्यमानो हयेन च । अत्राणो निरटन्नश्वेनैव निधनं गतः ॥ ५४ ॥ ततः प्रकर्षेणाभिहितम्—अधुनैवामुना प्राप्तं, मृगयाव्यसने फलम् । विमर्शः प्राह न फलं,

पुष्पमेतद्विभाव्यताम् ॥ ५५ ॥ फलं तु नरके घोरे, स्यादेवंविधकर्मणाम् । तथापि मूढाः खादन्ति, मांसं हिंसन्ति देहिनः ॥ ५६ ॥ इतश्च राजपुरुषैर्जिह्वामुत्पाट्य दारुणैः । तप्तं ताम्रं नरः कश्चित्पाय्यमानो निरीक्षितः ॥ ५७ ॥ ततो दयापरीतात्मा, प्रकर्षः प्राह मातुलम् ।— हा हा किमेष पुरुषो, निर्घृणैर्माम! पीड्यते? ॥ ५८ ॥ विमर्शेनोक्तं—भद्राकर्णय, अयं पुरुषोऽत्रैव मानवावासान्तर्भूते चणकपुरे वास्तव्यो महाधनः सुमुखो नाम सार्थवाहः, अयं च बालकालादारभ्य वाक्पारुष्यव्यसनी, ततो लोकैर्गुणनिष्पन्नमस्य दुर्मुख इति नाम प्रतिष्ठितं, प्रकृत्यैव चास्य प्रतिभासते स्त्रीकथा रोचते भक्तकथा मनोऽभीष्टा राजकथा हृदयिता देशकथा, सर्वथा जल्पे सति न कथञ्चिन्निजतुण्डं धारयितुं पारयति । इतश्च चणकपुराधिपतिरेव तीव्रो नाम राजा गतो रिपूणामुपरि विक्षेपेण लग्नमायोधनं जिता रिपवः, इतश्च निर्गते तस्मिन्नास्थायिकायां प्रस्तुताऽनेन राजकथा यदुत—प्रबलास्ते रिपवः, पराभविष्यन्ति राजानं, आगमिष्यन्ति ते पुरलुण्टनार्थं, ततो यथाशक्त्या पलायध्वं यूयं, तदाकर्ण्य नष्टं समस्तं पुरं, समागतो राजा, दृष्टं तन्निरुद्वसं चणकपुरं, किमेतदिति पृष्टमनेन, कथितः केनचिद्व्यतिकरः, कुपितो दुर्मुखस्योपरि तीव्रनरेन्द्रः, ततः पुनरावासिते पुरे प्रख्याप्य तं दुर्वचनभाषणलक्षणमपराधं पौराणामेवंविधोऽस्य दण्डो निर्वर्तितो राज्ञेति । प्रकर्षेणोदितं माम!, महाकष्टकमीदृशम् । यद्दुर्भाषणमात्रेण, संप्राप्तोऽयं वराककः ॥ १ ॥ मातुलेनोदितं वत्स!, विकथाऽऽसक्तचेतसाम् । अनियन्त्रिततुण्डानां, कियदेतद्दुरात्मनाम्? ॥ २ ॥ इयं हि कुरुते वैरं, देहिनां निर्निमित्तकम् । विधत्ते जनसन्तापं, मुत्कला भद्र! भारती ॥ ३ ॥ ते धन्यास्ते महात्मानस्ते श्लाघ्यास्ते मनस्विनः । ते वन्द्यास्ते दृढास्तत्त्वे, ते जगत्यमृतोपमाः ॥ ४ ॥ येषां मिताक्षरा सत्या, जगदाह्लादकारिणी । काले सद्बुद्धिपूता च, वर्तते भद्र! भारती ॥ ५ ॥ युग्मम् । ये तु मुत्कलवाणीका, तदन्तेऽर्देवितर्दकम् । तैरत्रैव महानर्था, नेदृशा वत्स! दुर्लभाः ॥ ६ ॥ सुश्लिष्टा मोचयत्येषा, भारती तात! देहि-

नग । उत्कृन्तला पुनर्वत्स!, तमेषा वन्धयत्यलम् ॥ ७ ॥ तदस्य विकथामूलं, दुर्भोज्यव्यसने फलम् । इदमीदृशमापन्नं, परलोके च दु-
र्गतिः ॥ ८ ॥ अत्रान्तरे प्रकर्षेण, राजमार्गे निपातिता । दृष्टिर्दृष्टश्च तत्रैकः, शुक्लवर्णाम्बरो नरः ॥ ९ ॥ ततः पप्रच्छ तं वीक्ष्य, क एष
इति मातुलम् । तेनोक्तं वत्स! हर्षोऽयं, रागकेसरिसैनिकः ॥ १० ॥ अस्त्यत्र मानवावासे, वासवो नाम वाणिजः । इदं च दृश्यते-
ऽभ्यर्णे, तस्य गेहं महाघनम् ॥ ११ ॥ बालकाले वियुक्तश्च, वयस्योऽत्यन्तवल्लभः । धनदत्तः समायातो, वासवानन्ददायकः ॥ १२ ॥
इदं कारणमुद्दिश्य, भवनेऽत्र प्रवेक्ष्यति । अयं हर्षः प्रविष्टश्च, पश्य किं किं करिष्यति? ॥ १३ ॥ ततो विस्फारिताक्षोऽसौ, प्रकर्षस्त-
त्त्रिरीक्षते । इतश्च वासवस्तेन, धनदत्तेन मीलितः ॥ १४ ॥ ततः प्रविष्टस्तद्देहे, स हर्षः सकुटुम्बके । संजातं च वणिग्गेहं, बृहदानन्द-
सुन्दरम् ॥ १५ ॥ आहूता बान्धवाः सर्वे, प्रवृत्तश्च महोत्सवः । ततो गायन्ति नृत्यन्ति, वादितानन्दमर्दलाः ॥ १६ ॥ अपि च—
वरभूषणमुज्ज्वलवेषधरं, प्रमदोत्कुरखादनपानपरम् । धनदत्तसमागमजातसुखं, तदभूदथ वासवगेहसुखम् ॥ १७ ॥ अथ तादृशि विस्म-
यसञ्जनके, क्षणमात्रविवर्धितवर्धनके । निजमाममवोचत बुद्धिसुतः, प्रविलोकनकौतुकतोपयुतः ॥ १८ ॥ यदिदं वेल्लते माम!, सर्वमर्द-
विनर्दकम् । वासवीयगृहं तत्किं, तेन हर्षेण नाटितम्? ॥ १९ ॥ विमर्शेनोदितं—वत्स!, साधु साधु विनिश्चितम् । अकाण्डसदनक्षोभे,
हर्ष एवात्र कारणम् ॥ २० ॥ अत्रान्तरेऽतिबीभत्सः, कृष्णवर्णधरो नरः । दृष्टो द्वारि प्रकर्षेण, तस्य वासवसद्मनः ॥ २१ ॥ ततस्तेनो-
दितं माम!, क एष पुरुषाधमः? । विमर्शेनोक्तम्—वत्स! शोकवयस्योऽयं, विषादो नाम दारुणः ॥ २२ ॥ यश्चैष पथिकः कश्चि-
त्प्रवेष्टुमिह वाञ्छति । प्रविष्टेऽत्र विषादोऽयं, भवनेऽत्र प्रवेक्ष्यते ॥ २३ ॥ ततः प्रविश्य पान्थेन, तेन वासवसन्निधौ । एकान्ते वास-
वस्यैव, गुह्यं किञ्चिन्निवेदितम् ॥ २४ ॥ अत्रान्तरे प्रविष्टोऽसौ, विषादस्तच्छरीरके । मूर्च्छया पतितश्चासौ, वासवो नष्टचेतनः ॥ २५ ॥

हा हा किमेतदित्युच्चैर्विलपन्निखिलो जनः । ततः समागतस्तस्य, निकटे भयविह्वलः ॥ २६ ॥ अथ वायुप्रदानाद्यैः, पुनः संजातचेतनः । प्रलापं कर्तुमारब्धः, सविषादः स वासवः ॥ २७ ॥ कथम्?—हा पुत्र! तात वत्सातिसुकुमारशरीरक । ईदृशी तव संजाता, काऽवस्था मम कर्मणा? ॥ २८ ॥ निर्गतोऽसि ममापुण्यैर्वत्स! वारयतो मम । दैवेन निर्घृणेनेदं, तव जात! विनिर्मितम् ॥ २९ ॥ हा हतोऽस्मि निराशोऽस्मि, मुषितोऽस्मि विलक्षणः । एवं व्यवस्थिते वत्स!, त्वयि किं मम जीवति? ॥ ३० ॥ यावच्च प्रलपत्येवं, स पुत्रस्नेहकातरः । तावद्विषादः सर्वेषु, प्रविष्टः स्वजनेष्वपि ॥ ३१ ॥ अथ ते तस्य माहात्म्यात्सर्वे वासववान्धवाः । हाहारवपरा गाढं, प्रलापं कर्तुमुद्यताः ॥ ३२ ॥ ततश्च—क्षणेन विगतानन्दं, दीनविह्वलमानुषम् । रुदन्नारीजनं मूढं, जातं वासवमन्दिरम् ॥ ३३ ॥ ततस्तत्तादृशं दृष्ट्वा, प्रकर्षः प्राह मातुलम् । किमिदं माम! संजातं, गृहे तु प्रेक्षणान्तरम्? ॥ ३४ ॥ विमर्शः प्राह तत्तुभ्यमादावेव निवेदितम् । मया यथाऽन्तरायत्ता, वहिरङ्गा इमे जनाः ॥ ३५ ॥ ततश्चेदं तथा पूर्वं, हर्षेण प्रविनाटितम् । अधुना नाटयत्येवं, विषादोऽसौ वराककम् ॥ ३६ ॥ तदत्र भवने लोकाः, किं कुर्वन्तु तपस्विनः?। ये हि हर्षविषादाभ्यां, क्षणार्धेन विनाटिताः ॥ ३७ ॥ प्रकर्षः प्राह किं गुह्यं, कर्णाभ्यर्णविवर्तिना । अनेन वासवस्यास्य, पुरुषेण निवेदितम्? ॥ ३८ ॥ विमर्शेनोदितं वत्स!, समाकर्णय साम्प्रतम् । अस्त्यस्य **वर्धनो** नाम, पुत्रो हृदयवल्लभः ॥ ३९ ॥ स चैक एव पुत्रोऽस्य, यौवनस्थो मनोहरः । उपयाचितकोटीभिर्जातो विनयतत्परः ॥ ४० ॥ अनेन वार्यमाणोऽपि, स धनार्जनकाम्यया । प्रविधाय महासार्थं, गतो देशान्तरे पुरा ॥ ४१ ॥ स चोपार्ज्य धनं भूरि, स्वदेशागमकामुकः **कादम्बर्यां** महाटव्यां, गृहीतो वत्स! तस्करैः ॥ ४२ ॥ विलुप्तं धनसर्वस्वं, हतः सार्थः सबान्धवः । बद्धा गृहीता वन्धश्च, तस्करैर्धनकामिभिः ॥ ४३ ॥ तासां मध्ये गृहीतश्च, वर्धनः क्रूरकर्मभिः । स सार्थवाह इत्येवंवादिभिर्भद्र! तस्करैः ॥ ४४ ॥

नीत्वा पाल्लिं ततोऽनेकयातनाशतपीडितः । स चौरैर्विहितो वत्स!, वर्धनो धनवाञ्छया ॥ ४५ ॥ अयं च पुरुषस्तस्य, सर्वदा पादधारकः । वत्स! लम्बनको नाम, गृहजो दासदारकः ॥ ४६ ॥ ततस्तं तादृशं दृष्ट्वा, स्वामिनं चौरपीडितम् । नंष्ट्वा कथञ्चिदायातो, वृत्तान्तस्य निवेदकः ॥ ४७ ॥ निवेदिते च वृत्तान्ते, तथा वासववाणिजः । यदकार्षीत्त्वया तत्र, दृष्टमेव ततः परम् ॥ ४८ ॥ प्रकर्षेणोदितं माम!, प्रलापाक्रन्दरोदनैः । किमनीभिः परित्राणं, तस्य संजनितं कृतैः? ॥ ४९ ॥ विमर्शेनोदितं वत्स!, नैतदेवं तथापि च । एवमेते प्रकुर्वन्ति, विषादेन विनाटिताः ॥ ५० ॥ धनदत्तागमं प्राप्य, ये हर्षवशवर्तिनः । वर्धनापदमासाद्य, विषादेन विनाटिताः ॥ ५१ ॥ तेषां हर्षविषादाभ्यामेतेषां पीडितात्मनाम् । कीदृशी वा भवेत्तात!, पर्यालोचितकारिता? ॥ ५२ ॥ ततश्च—अवीक्ष्य वस्तुनस्तत्त्वमनालोच्य हिताहितम् । एते विडम्बयन्त्येवमात्मानं तद्वशानुगाः ॥ ५३ ॥ किंच—नात्र केवलमीदृक्षं, वासवीये गृहोदरे । आभ्यां हर्षविषादाभ्यां, प्रेक्षणं वत्स! नाट्यते ॥ ५४ ॥ किं तर्हि?—सर्वत्र भवचक्रेऽस्मिन्, कारणैरपरापरैः । एतौ नर्तयतो नित्यं, जनमेनं गृहे गृहे ॥ ५५ ॥ यतः—पुत्रं राज्यं धनं मित्रमन्यद्वा सुखकारणम् । हर्षस्यास्य वशं यान्ति, प्राप्यास्मिन् मूढजन्तवः ॥ ५६ ॥ ततस्ते तत्परायत्ताः, सद्बुद्धिविकला नराः । वत्स! किं किं न कुर्वन्ति, हास्यस्थानं विवेकिनाम्? ॥ ५७ ॥ न चिन्तयन्ति ते मूढा, यथेदं पूर्वकर्मणा । पुत्रराज्यादिकं सर्वं, जन्तूनामुपपद्यते ॥ ५८ ॥ ततः कर्मपरायत्ते, तुच्छे बाह्येऽतिगत्वरे । कथञ्चित्तत्र संपन्ने, हर्षः स्यात्केन हेतुना? ॥ ५९ ॥ तथा—विषादेन च बाध्यन्ते, वियोगं प्राप्य वल्लभैः । अनिष्टैः संप्रयोगं च, नानाव्याधिशतानि च ॥ ६० ॥ प्राप्यैवाथ विषादेन, सदाऽमी मूढदेहिनः । आक्रन्दनं मनस्तापं, दैन्यमेवं च कुर्वते ॥ ६१ ॥ न पुनर्भावयन्त्येवं, यथेदं पूर्वसंचितैः । कर्मभिर्जनितं दुःखं, विषादावसरः कथम्? ॥ ६२ ॥ अन्यच्च—विषादो वर्धयत्येव, तद्दुःखं तात! देहिनाम् । न त्राणकारकस्त्राणं,

केवलं शुभचेष्टितम् ॥ ६३ ॥ यतः—दुःखानि पापमूलानि, पापं च शुभचेष्टितैः । सर्वं प्रलीयते वत्स!, ततो दुःखोद्भवः कुतः? ॥ ६४ ॥ प्रकर्षः प्राह यद्येवं, ततः सुन्दरचेष्टिते । वरमेभिः कृतो यत्नो, न विपादस्य शासने ॥६५॥ विमर्शेनाभिहितम्—चारु चारूदितं वत्स!, केवलं मूढजन्तवः । इदमेते न जानन्ति, भवचक्रनिवासिनः ॥ ६६ ॥ अन्यच्चात्र—कियन्ति संविधानानि, शृङ्गग्राहिकया तव । मया निवेदयिष्यन्ते, नगरे पारवर्जिते? ॥ ६७ ॥ इतश्च—अस्य स्वरूपविज्ञाने, बलवत्ते कुतूहलम् । अतः समासतो वत्स!, तुभ्यमेतन्निवेदये ॥ ६८ ॥ आरूढः पर्वते तात!, विवेकाख्येऽत्र निर्मले । इदं विलोकयत्येवं, रूपतः किं निवेद्यताम् ॥ ६९ ॥ गुणतश्च पुनर्वत्स!, वर्ण्यमानं मया स्फुटम् । इदं यथावद्बुध्यस्व, भवचक्रं महापुरम् ॥ ७० ॥ अवान्तरपुरैर्वत्स!, भूरिभिः परिपूरितम् । यद्यपीदं तथाप्यत्र, श्रेष्ठं पुरचतुष्टयम् ॥७१॥ एकं हि **मानवावासं**, द्वितीयं **विबुधालयम्** । तृतीयं **पशुसंस्थानं**, चतुर्थं **पापिपञ्जरम्** ॥ ७२ ॥ एतानि तानि चत्वारि, प्रधानानीह पत्तने । पुराणि व्यापकानीति, सर्वेषां मध्यवर्तिनाम् ॥ ७३ ॥ तत्रेदं मानवावासं, महामोहादिभिः सदा । अन्तरङ्गजनैर्व्याप्तमेतैः कलकलाकुलम् ॥ ७४ ॥ कथम्?—"क्वचिदिष्टजनप्राप्तौ, तोषनिर्भरमानुषम् । क्वचिद्द्वेष्यजनासक्तेर्विमनीभूत-"दुर्जनम् ॥ ७५ ॥ क्वचिद्धनलवावाप्तिजनितानन्दसुन्दरम् । क्वचिद्द्रविणनाशोत्थबृहत्सन्तापतापितम् ॥ ७६ ॥ क्वचिद्दुर्लभसत्सूनुजन्मो-"द्भूतमहोत्सवम् । क्वचिदत्यन्तचित्तेष्टमरणाक्रन्दगुन्दलम् ॥ ७७ ॥ क्वचित्सुभटसङ्घातप्रारब्धरणभीषणम् । क्वचिन्मिलितसन्मित्रविमुक्तनय-"नोदकम् ॥ ७८ ॥ क्वचिद्दारिद्र्यदौर्भाग्यविविधव्याधिपीडितम् । क्वचिच्छब्दादिसंभोगादलीकसुखनिर्भरम् ॥ ७९ ॥ क्वचित्सन्मार्गदूरस्थ-"पापिष्ठजनपूरितम् । क्वचिच्च धर्मबुद्ध्यापि, विपरीतविचेष्टितम् ॥ ८० ॥ किं चेह बहुनोक्तेन?, चरितानि पुरा मया । यावन्ति वर्णिता-"न्युच्चैर्महामोहादिभूभुजाम् ॥ ८१ ॥ तावन्ति वत्स! दृश्यन्ते, सर्वाण्यत्र विशेषतः । सततं मानवावासे, कारणैरपरापरैः ॥ ८२ ॥" त-

गतिचतु-
ष्कवर्णनं

"इदं मानवावासं, किञ्चिल्लेशेन वर्णितम् । अधुना कथ्यते तुभ्यं, सत्पुरं विबुधालयम् ॥ ८३ ॥ "नाकरूपमिदं ज्ञेयं, सत्पुरं विबुधाल-
"यम् । मत्पारिजातमन्दारसन्तानकवनाकुलम् ॥ ८४ ॥ उल्लसद्भिश्च गन्धाढ्यैर्नमेरुहरिचन्दनैः । सदा विकसितै रम्यं, कह्लारकमलाकरैः
"॥ ८५ ॥ पद्मरागमहानीलवज्रवैडूर्यराशिभिः । दिव्यहाटकसम्मिश्रैर्घटितानेकपाटकम् ॥ ८६ ॥ प्रेङ्खन्मणिप्रभाजालैः, सदा निर्नष्टता-
"मसम् । विचित्ररत्नसञ्जातमयूखैः प्रविराजितम् ॥ ८५ ॥ दिव्यभूषणसद्गन्धमाल्यसंभोगलालितम् । नित्यप्रमोदमुद्दामगीतनृत्यमनोहरम्
"॥८६॥ नित्यं प्रमुदितैर्दिव्यैस्तेजोनिर्जितभास्करैः । लसत्कुण्डलकेयूरमौलिहारविराजितैः ॥ ८७ ॥ कलालिकुलझङ्कारहारिमन्दारदामभिः ।
"अम्लानवनमालाभिर्नित्यमामोदिताशयैः ॥ ८८ ॥ रतिसागरमध्यस्थैः, प्रीणितेन्द्रियसुस्थितैः । सदेदमीदृशैर्लोकैः, पूरितं विबुधालयम्"
॥ ८९ ॥ षड्भिः कुलकम् । यः पूर्वं वेदनीयाख्यनृपतेः पुरुषो मया । साताभिधानस्ते भद्र !, कथितस्तत्र मण्डपे ॥९०॥ स कर्मपरिणामेन,
जनाह्लादविधायकः । विहितो निखिलस्यास्य, पुरस्य वरनायकः ॥ ९१ ॥ युग्मम् । ततस्तेन लसद्भोगं, सतताह्लादसुन्दरम् । इदं हि वत्स !
निःशेषं, धार्यते विबुधालयम् ॥ ९२ ॥ प्रकर्षेणोदितं माम !, महामोहादिभूभुजाम् । किमत्र प्रसरो नास्ति ?, येनेदमतिसुन्दरम् ॥ ९३ ॥
विमर्शः प्राह मा मैवं, मन्येथास्त्वं कथञ्चन । प्रभवन्ति प्रकर्षेण, यतोऽत्रान्तरभूभुजः ॥ ९४ ॥ ईर्ष्याशोकभयक्रोधलोभमोहमदभ्रमैः ।
सतताकुलितं वत्स !, पुरं हि विबुधालयम् ॥ ९५ ॥ प्रकर्षः प्राह यद्येवं, ततोऽत्र ननु किं सुखम् ? । किं वेदं हृष्टचित्तेन, भवता
माम वर्णितम् ? ॥ ९६ ॥ ततस्तेनोदितं वत्स !, न सुखं परमार्थतः । नाप्यत्र सुन्दरं किञ्चित्तत्त्वतो विबुधालये ॥ ९७ ॥ केवलं
मुग्धबुद्धीनां, विषयामिषवाञ्छिनाम् । अत्रास्था महती वत्स !, मयेदं तेन वर्णितम् ॥ ९८ ॥ इतरथा—महामोहनरेन्द्रस्य, परिवारस-
मायुजः । क राज्यं ? क च लोकानां, सुखवार्तेति दुर्घटम् ॥ ९९ ॥ तदिदं ते समासेन, कथितं विबुधालयम् । अधुना पशुसंस्थानं,

सविब्बोकविपर्यासपराक्रमैः । वल्गनोत्प्लवनोल्लासलासधावनसम्मदैः ॥ १३८ ॥ गर्वशौण्डीर्यखिङ्गत्वसाहसादिभिरुद्धतैः । युतः पदातिभिर्लोकैर्लीलया स विजृम्भते ॥ १३९ ॥ तत्सम्बन्धादमी भोगसम्भोगसुखनिर्भरम् । आत्मानं मन्वते लोका, भवचक्रनिवासिनः ॥ १४० ॥ ततस्तं निजवीर्येण, यौवनाख्यमियं जरा । मृद्नाति सपरीवारं, क्रुद्धा कृत्येव साधकम् ॥ १४१ ॥ ततस्ते जरसा वत्स!, जना मर्दितयौवनाः । परीता दुःखकोटीभिर्जायन्ते दीनविक्लवाः ॥ १४२ ॥ स्वभार्ययाऽप्यवज्ञाताः, परिवारावधीरिताः । उत्प्रास्यमानाः स्वापत्यैस्तरुणीभिस्तिरस्कृताः ॥ १४३ ॥ स्मरन्तः पूर्वभुक्तानि, कासमाना मुहुर्मुहुः । श्लेष्माणमुद्गिरन्तश्च, लुठन्तो जीर्णमञ्चके ॥ १४४ ॥ परतप्तिपराः प्रायः, क्रुध्यन्तश्च पदे पदे । आक्रान्ता जरया वत्स!, केवलं शेरते जनाः ॥ १४५ ॥ युग्मम् । एषा जरा समासेन, लोकपीडनतत्परा । वर्णिता तेऽधुना वक्ष्ये, रुजां वैवस्वतीं भुजाम् ॥ १४६ ॥ यो वेदनीयनृपतेरसाताख्यो वयस्यकः । वर्णितस्तत्प्रयुक्तेयं, रुजा तेन दुरात्मना ॥ १४७ ॥ वर्णयन्ति निमित्तानि, वहिर्भूतानि सूरयः । अस्याः प्रयोजकान्युच्चैर्नानाकाराणि शाश्वतः ॥ १४८ ॥ धीधृतिस्मृतिविभ्रंशः, सम्प्राप्तिः कालकर्मणाम् । असात्म्यार्थागमश्चेति, रुजाहेतुरयं गणः ॥ १४९ ॥ वातपित्तकफानां च, यद्यत्संक्षोभकारणम् । रजस्तमस्करं चेति, तत्तदस्याः प्रयोजकम् ॥ १५० ॥ किं तु—बाह्यान्यपि निमित्तानि, स एव परमार्थतः । असाताख्यः प्रयुङ्क्तेऽतः, स एव परकारणम् ॥ १५१ ॥ प्रविष्टेयं शरीरेषु, योगित्वेन शरीरिणाम् । स्वास्थ्यं निहत्य वीर्येण, करोत्यातुरतां पराम् ॥ १५२ ॥ ज्वरातिसारकुष्ठार्शःप्रमेहप्लीहधूमकाः । अम्लकग्रहणीशूलहिक्काश्वासक्षयभ्रमाः ॥ १५३ ॥ गुल्महृद्रोगसंमोहहृल्लासानाहकम्पकाः । कण्डूकोष्ठारुचीशोफभगन्दरगलामयाः ॥ १५४ ॥ पामाजलोदरोन्मादशोषवीसर्पछर्दयः । नेत्ररोगशिरोरोगविद्रधिप्रमुखा भटाः ॥ १५५ ॥ सर्वेऽप्यस्याः परीवारः, स्वात्मभूतो महाबलः । यत्प्रभावादियं वत्स!, रुजा जेतुं न पार्यते ॥ १५६ ॥ चतुर्भिः कलापकम् । अस्ति

रुजास्वरूपं

नीरोगता नाम, वेदनीयाख्यभूपतेः । पदातिनेह सातेन, प्रयुक्ता भवचक्रके ॥ १५७ ॥ सा वर्णबलसौन्दर्यधीधृतिस्मृतिपाटवैः । परीता कुरुते लोकं, मुग्धसन्दर्भनिर्भरम् ॥ १५८ ॥ तां चैषा दारुणा हत्वा, क्षणान्नीरोगतां रुजा । प्रवर्तयति लोकानां, तीव्रार्तिं तनुचित्तयोः ॥ १५९ ॥ तेनेयं तद्विघाताय, रुजेत्यं वत्स! वल्गते । एतदाक्रान्तमूर्तीनां, चेष्टाऽऽख्यातुं न पार्यते ॥ १६० ॥ तथाहि—कूजन्ति करुणध्वानैः, क्रन्दन्ति विकृतस्वराः । रुदन्ति दीर्घपूत्कारैरारटन्ति सविह्वलाः ॥ १६१ ॥ गाढं दीनानि जल्पन्ति, रुण्टन्ति च मुहुर्मुहुः । लुठन्तीतस्ततो मूढाश्चेतयन्ते न किञ्चन ॥ १६२ ॥ नित्यमार्ताः सदोद्विग्ना, विक्लवास्त्राणवर्जिताः । भयोद्भ्रान्तधियो दीना, नरकेष्विव नारकाः ॥ १६३ ॥ भवन्ति भवचक्रेऽत्र, सत्त्वाः पापिष्ठयाऽनया । हत्वा नीरोगतां वत्स!, रुजया परिपीडिताः ॥ १६४ ॥ तदेषा लेशतो वत्स!, रुजा ते गदिता मया । मृतिर्मर्दितविश्वेयं, साम्प्रतं ते निवेद्यते ॥ १६५ ॥ योऽसौ ते दर्शितः पूर्वमायुर्नामा महीपतिः । चतुर्नरपरीवारस्तत्क्षयोऽस्याः प्रयोजकः ॥ १६६ ॥ प्रयुज्यते विचित्रैश्च, बहिर्हेतुशतैरियम् । विषाग्निशस्त्रपानीयगिरिपातातिसाध्वसैः ॥ १६७ ॥ बुभुक्षाव्याधिदुर्व्यालपिपासोष्णहिमश्रमैः । वेदनाहारदुर्ध्यानपराघातारतिश्रमैः ॥ १६८ ॥ प्राणापानोपरोधाद्यैः, किं नु तैरप्युदीरिता । तमेवायुःक्षयं प्राप्य, मृतिरेषा विवल्गते ॥ १६९ ॥ वीर्यं पुनरदोऽमुष्या, यदियं देहिनां क्षणात् । हरत्युच्छ्वासनिश्वासं, नेष्टां भाषां सचेतनाम् ॥ १७० ॥ विधत्ते रक्तनिर्नाशं, वैकृत्यं काष्ठभूतताम् । दौर्गन्ध्यं च क्षणादूर्ध्वं, स्वपनं दीर्घनिद्रया ॥ १७१ ॥ परिवारस्तु नास्त्यस्या, न चेयं तमपेक्षते । इयं हि तीव्रवीर्येण, सदैका किंमनुष्यिका ॥ १७२ ॥ यतोऽस्या नाममात्रेण, भुवनं सचराचरम् । सनरेन्द्रं सदेवेन्द्रं, कम्पते त्रस्तमानसम् ॥ १७३ ॥ सद्वीर्यबलभाजोऽपि, प्रभवोऽपि जगत्त्रये । आसन्नामपि सत्त्वैनां, भवन्ति भयकातराः ॥ १७४ ॥ अतः परिच्छदेनास्यास्तात! किं वा प्रयोजनम्? । एकिकापि करोत्येषा, दूरे यच्छ्रूयतेऽद्भुतम् ॥ १७५ ॥ अत

सविब्बोकविपर्यासपराक्रमैः । वल्गनोत्प्लवनोल्लासलासधावनसम्मदैः ॥ १३८ ॥ गर्वशौण्डीर्यखिङ्गत्वसाहसादिभिरुद्धतैः । युतः पदातिभिर्लोकैर्लीलया स विजृम्भते ॥ १३९ ॥ तत्सम्बन्धादमी भोगसम्भोगसुखनिर्भरम् । आत्मानं मन्वते लोका, भवचक्रनिवासिनः ॥ १४० ॥ ततस्तं निजवीर्येण, यौवनाख्यमियं जरा । मृद्नाति सपरीवारं, क्रुद्धा कृत्येव साधकम् ॥ १४१ ॥ ततस्ते जरसा वत्स!, जना मर्दितयौवनाः । परीता दुःखकोटीभिर्जायन्ते दीनविक्लवाः ॥ १४२ ॥ स्वभार्ययाऽप्यवज्ञाताः, परिवारावधीरिताः । उत्प्रास्यमानाः स्वापत्यैस्तरुणीभिस्तिरस्कृताः ॥ १४३ ॥ स्मरन्तः पूर्वभुक्तानि, कासमाना मुहुर्मुहुः । श्लेष्माणमुद्गिरन्तश्च, लुठन्तो जीर्णमञ्चके ॥ १४४ ॥ परतप्तिपराः प्रायः, क्रुध्यन्तश्च पदे पदे । आक्रान्ता जरया वत्स!, केवलं शेरते जनाः ॥ १४५ ॥ युग्मम् । एषा जरा समासेन, लोकपीडनतत्परा । वर्णिता तेऽधुना वक्ष्ये, रुजां वैवस्वतीं भुजाम् ॥ १४६ ॥ यो वेदनीयनृपतेरसाताख्यो वयस्यकः । वर्णितस्तत्प्रयुक्तेयं, रुजा तेन दुरात्मना ॥ १४७ ॥ वर्णयन्ति निमित्तानि, बहिर्भूतानि सूरयः । अस्याः प्रयोजकान्युच्चैर्नानाकाराणि शास्त्रतः ॥ १४८ ॥ धीधृतिस्मृतिविभ्रंशः, सम्प्राप्तिः कालकर्मणाम् । असात्म्यार्थागमश्चेति, रुजाहेतुरयं गणः ॥ १४९ ॥ वातपित्तकफानां च, यद्यत्संक्षोभकारणम् । रजस्तमस्करं चेति, तत्तदस्याः प्रयोजकम् ॥ १५० ॥ किं तु—बाह्यान्यपि निमित्तानि, स एव परमार्थतः । असाताख्यः प्रयुङ्क्तेऽतः, स एव परकारणम् ॥ १५१ ॥ प्रविष्टेयं शरीरेषु, योगित्वेन शरीरिणाम् । स्वास्थ्यं निहत्य वीर्येण, करोत्यातुरतां पराम् ॥ १५२ ॥ ज्वरातिसारकुष्ठार्शःप्रमेहप्लीहधूमकाः । अम्लकग्रहणीशूलहिक्काश्वासक्षयभ्रमाः ॥ १५३ ॥ गुल्महृद्रोगसंमोहहृल्लासानाहकम्पकाः । कण्डूकोष्ठारुचीशोफभगन्दरगलामयाः ॥ १५४ ॥ पामाजलोदरोन्मादशोषवीसर्पछर्दयः । नेत्ररोगशिरोरोगविद्रधिप्रमुखा भटाः ॥ १५५ ॥ सर्वेऽप्यस्याः परीवारः, स्वात्मभूतो महाबलः । यत्प्रभावादियं वत्स!, रुजा जेतुं न पार्यते ॥ १५६ ॥ चतुर्भिः कलापकम् । अस्ति

रुजास्वरूपं

नीरोगता नाम, वेदनीयाख्यभूपतेः । पदातिनेह सातेन, प्रयुक्ता भवचक्रके ॥ १५७ ॥ सा वर्णबलसौन्दर्यधीधृतिस्मृतिपाटवैः । परीता
कुरुते लोकं, सुखमन्दर्भनिर्भरम् ॥ १५८ ॥ तां चैषा दारुणा हत्वा, क्षणान्नीरोगतां रुजा । प्रवर्तयति लोकानां, तीव्रार्तिं तनुचित्तयोः
॥ १५९ ॥ तेनेयं तद्विघाताय, रुजेत्थं वत्स! वल्गते । एतदाक्रान्तमूर्तीनां, चेष्टाऽऽख्यातुं न पार्यते ॥ १६० ॥ तथाहि—कूजन्ति
करुणध्वानैः, क्रन्दन्ति विकृतस्वराः । रुदन्ति दीर्घपूत्कारैरारटन्ति सविह्वलाः ॥ १६१ ॥ गाढं दीनानि जल्पन्ति, रुण्टन्ति च मुहु-
र्मुहुः । लुठन्तीतस्ततो मूढाश्चेतयन्ते न किञ्चन ॥ १६२ ॥ नित्यमार्ताः सदोद्विग्ना, विक्लवास्त्राणवर्जिताः । भयोद्भ्रान्तधियो दीना, नर-
केष्विव नारकाः ॥ १६३ ॥ भवन्ति भवचक्रेऽत्र, सत्त्वाः पापिष्ठयाऽनया । हत्वा नीरोगतां वत्स!, रुजया परिपीडिताः ॥ १६४ ॥
तदेषा लेशतो वत्स!, रुजा ते गदिता मया । मृतिर्मर्दितविश्वेयं, साम्प्रतं ते निवेद्यते ॥ १६५ ॥ योऽसौ ते दर्शितः पूर्वमायुर्नामा
महीपतिः । चतुर्नरपरीवारस्तत्क्षयोऽस्याः प्रयोजकः ॥ १६६ ॥ प्रयुज्यते विचित्रैश्च, बहिर्हेतुशतैरियम् । विषाग्निशस्त्रपानीयगिरिपातातिि-
साध्वसैः ॥ १६७ ॥ बुभुक्षाव्याधिदुर्व्यालपिपासोष्णहिमश्रमैः । वेदनाहारदुर्ध्यानपराघातारतिभ्रमैः ॥ १६८ ॥ प्राणापानोपरोधाद्यैः,
किं तु तैरप्युदीरिता । तमेवायुःक्षयं प्राप्य, मृतिरेषा विवल्गते ॥ १६९ ॥ वीर्यं पुनरदोऽमुष्या, यदियं देहिनां क्षणात् । हरत्युच्छ्वासनि-
श्वासं, चेष्टां भाषां सचेतनाम् ॥ १७० ॥ विधत्ते रक्तनिर्नाशं, वैकृत्यं काष्ठभूतताम् । दौर्गन्ध्यं च क्षणादूर्ध्वं, स्वपनं दीर्घनिद्रया ॥१७१॥
परिवारस्तु नास्त्यस्या, न चेयं तमपेक्षते । इयं हि तीव्रवीर्येण, सदैका किंमनुष्यिका ॥ १७२ ॥ यतोऽस्या नाममात्रेण, भुवनं सचरा-
चरम् । सनरेन्द्रं सदेवेन्द्रं, कम्पते त्रस्तमानसम् ॥ १७३ ॥ सद्वीर्यबलभाजोऽपि, प्रभवोऽपि जगत्त्रये । आसन्नामपि मत्वैनां, भवन्ति
भयकातराः ॥ १७४ ॥ अतः परिच्छदेनास्यास्तात! किं वा प्रयोजनम्? । एकिकापि करोत्येषा, दूरे यच्छ्रूयतेऽद्भुतम् ॥ १७५ ॥ अत

मृतिस्वरूपं

वीर्यं पुनरदोऽमुष्या, यदेषा देहवर्तिनी । सदा हि कुरुते रूपं, द्रष्टेरुद्वेगकारणम् ॥ २१४ ॥ खञ्जताकुण्टताकाण्यवामनत्वविवर्णताः । कुब्जत्वान्धत्वबाडव्यहीनाङ्गत्वादि(ति)दीर्घताः ॥ २१५ ॥ इत्याद्याः परिवारेऽस्या, वर्तन्ते वत्स! दुर्जनाः । यत्सम्पर्कादियं हृष्टा, विलसत्यतिलीलया ॥ २१६ ॥ अस्ति प्रयुक्ता तेनैव, नामनाम्ना सुरूपता । सुप्रसन्नेन तन्मूलबहिरङ्गनिमित्तजा ॥ २१७ ॥ तथाहि—शुभाहारविहाराद्यैः, प्रसीदन्तः कफादयः । हेतवो देहिनां देहे, जनयन्ति सुरूपताम् ॥ २१८ ॥ सा जनं भवचक्रेऽत्र, द्रष्टेराह्लादकारणम् । प्रसन्नवर्णं पद्माक्षं, सुविभक्ताङ्गभूषणम् ॥ २१९ ॥ गजेन्द्रगामिनं रम्यं, सुराकारानुकारिणम् । करोति निजवीर्येण, लोकमोदनकारिणी ॥ ॥ २२० ॥ तस्या विपक्षभूतेयं, प्रकृत्यैव कुरूपता । तां हत्वाऽऽविर्भवत्येषा, देहिदेहेषु योगिनी ॥ २२१॥ ततः सुरूपताहीनाः, प्रादुर्भूतकुरूपताः । भवन्ति ते जना वत्स!, द्रष्टेरुद्वेगकारिणः ॥ २२२ ॥ अनादेयाः स्वहीनत्वशङ्किता हास्यभूमयः । भवन्ति क्रीडनस्थानं, बालानां रूपगर्विणाम् ॥ २२३ ॥ निर्गुणाश्च भवन्त्येते, प्रायशो वामनादयः । आकृतौ च वसन्त्येते, प्रकृत्या निर्मला गुणाः ॥ २२४ ॥ विडम्बनकरी लोके, तदियं ते कुरूपता । निरूपिताऽधुना वत्स!, कथयामि दरिद्रताम् ॥ २२५ ॥ प्रयुक्ता तावदेषाऽपि, वत्स! तेनैव पापिना । अन्तरायं पुरस्कृत्य, पापोदयचमूभृता ॥ २२६ ॥ प्रयुञ्जते पुनर्लोके, हेतवो ये बहिर्गताः । एनां दरिद्रतां तात!, तानहं ते निवेदये ॥ २२७ ॥ जलज्वलनलुण्टाकराजदायादतस्कराः । मद्यद्यूतादिभोगित्ववेश्याव्यसनदुर्नयाः ॥ २२८ ॥ ये चान्ये कुर्वते केचिद्धनहानिं वयस्यिकाम् । अस्यास्ते हेतवः सर्वे, वत्स! ज्ञेयाः प्रयोजकाः ॥२२९॥ युग्मम् । केवलं तत्त्वतस्तेऽपि, सान्तरायं चमूभृतम् । पापोदयाख्यं कुर्वन्ति, प्रह्वमस्याः प्रयोजकम् ॥ २३० ॥ दुराशापाशसंमूढं, धनगन्धविवर्जितम् । वीर्येण कुरुते लोकमेषा तात! दरिद्रता ॥ २३१ ॥ दैन्यं परिभवो मौढ्यं, प्रायशो बह्वपत्यता । हृदयन्यूनता याच्ञा, लाभाभावो दुरिच्छता ॥ २३२ ॥ बुभुक्षारतिसन्तापाः,

दरिद्रता-स्वरूपं

कुटुम्बपरिवेषनम् । अस्या इत्यादयो वत्स!, भवन्ति परिचारकाः ॥ २३३ ॥ युग्मम् । अस्ति पुण्योदयाख्येन, प्रयुक्तः पृथिवीतले । जनाह्लादकरोऽत्यन्तमैश्वर्याख्यो नरोत्तमः ॥ २३४ ॥ स सौष्ठवमहोत्सेकहृदयोन्नतिगौरवैः । जनवाङ्गभ्यलालित्यमहेच्छादिविवेष्टितः ॥ २३५ ॥ सुभूरिधनसम्भारपूरितं जनताधिकम् । करोति सुखितं मान्यं, लोकमुद्दामलीलया ॥ २३६ ॥ इयं हि चेष्टते तात!, परिवारसमेयुगी । तद्दलनचातुर्यमाविभ्राणा दरिद्रता ॥ २३७ ॥ न तेन सार्धमेतस्याः, सहावस्थानमीक्ष्यते । एतत्रासादसौ वत्स!, दूरतः प्रपलायते ॥ २३८ ॥ ततोऽनया हृतैश्वर्यास्ते जना दुःखपीडिताः । गाढं विह्वलतां यान्ति, विधुरीभूतमानसाः ॥ २३९ ॥ दुराशापाशबद्धत्वाद्भूयो धनलवेच्छया । नानोपायेषु वर्तन्ते, ताम्यन्ति च दिवानिशम् ॥ २४० ॥ ते च पापोदयेनैषामुपाया बहवोऽप्यलम् । प्रबलेन विपाट्यन्ते, मे घना इव वायुना ॥ २४१ ॥ ततो रुण्टन्त्यमी मूढाः, खिद्यन्ते मनसाऽधिकम् । शोचन्ति पुरतोऽन्येषां, वाञ्छन्ति परसम्पदः ॥ २४२ ॥ कुतो घृतं कुतस्तैलं, कुतो धान्यं क चेन्धनम्? । कुटुम्बचिन्तया दग्धा, इति रात्रौ न शेरते ॥ २४३ ॥ कुर्वन्ति निन्द्यकर्माणि, धर्मकर्मपराङ्मुखाः । व्रजन्ति गौन्यतां लोके, लघीयांसस्तृणादपि ॥ २४४ ॥ परप्रेष्यकरा दीनाः, क्षुत्क्षामा मलपूरिताः । भूरिदुःखशतैर्ग्रस्ताः, प्रत्यक्षा इव नारकाः ॥ २४५ ॥ भवन्ति ते जनास्तात!, येषामेषा दरिद्रता । ऐश्वर्याख्यं निहन्त्युच्चैः, करोत्यालिङ्गनं मुदा ॥ २४६ ॥ तदेवमीरिता तात!, तुभ्यमेषा दरिद्रता । इयं दुर्भगतेदानीं, गद्यमाना निशम्यताम् ॥ २४७ ॥ रुष्टेन भवचक्रेऽत्र, केषाञ्चिद्देहिनामलम् । प्रयुक्तेयं विशालाक्षी, तेन नाममहीभुजा ॥ २४८ ॥ वहिरङ्गं भवेदस्यास्तात! चित्रं प्रयोजकम् । वैरूप्यदुःस्वभावत्वदुष्कर्णवचनादिकम् ॥ २४९ ॥ तत्तु नैकान्तिकं ज्ञेयं, स एव परमार्थतः । हेतुरैकान्तिकोऽमुष्या, नामनामा महीपतिः ॥२५०॥ गीर्ग तु वर्णयन्त्यस्या, ज्ञाततत्त्वा मनीषिणः । अवज्ञमतिद्वेष्यं, यदेषा कुरुते जनम् ॥ २५१ ॥ दीनताभिभवो लज्जा, चित्तदुःखासि-

काऽतुला । न्यूनता लघुता वेषविज्ञानफलहीनता ॥ २५२ ॥ इत्याद्याः परिवारेऽस्या, भवन्ति वह्वो जनाः । पुरेऽत्र यद्बलादेषा, बम्भ्रमीति बलोद्धुरा ॥ २५३ ॥ अस्ति प्रयुक्ता तेनैव, सुप्रसन्नेन देहिनाम् । नाम्ना सुभगता नाम्ना, प्रख्याता जनमोदिनी ॥ २५४ ॥ सा सौष्ठवमनस्तोषगर्वगौरवसम्मदैः । आयत्यपरिभूताद्यैः, परिवारितविग्रहा ॥ २५५ ॥ व्रजन्ती भवचक्रेऽत्र, जनमानन्दनिर्भरम् । करोति सुखितं मान्यं, निःशेषजनवल्लभम् ॥ २५६ ॥ तस्याश्च प्रतिपक्षत्वादियं दुर्भगताऽधमा । उन्मूलनकरी तात!, करिणीव लताततेः ॥२५७॥ अतः सोन्मूलिता येषामेनया हितकारिणी । ते प्रकृत्यैव जायन्ते, जनानां गाढमप्रियाः ॥ २५८ ॥ स्वभर्त्रेऽपि न रोचन्ते, परेभ्यो नितरां पुनः । बन्धुभ्योऽपि न भासन्ते, जना दुर्भगताहताः ॥ २५९ ॥ गम्यत्वात्ते सपत्नानां, वल्लभानामवल्लभाः । नयन्ति क्लेशतः कालमात्मनिन्दापरायणाः ॥ २६० ॥ तदेषाऽपि समासेन, वत्स! दुर्भगता मया । तुभ्यं निगदिता याऽसावुद्दिष्टा सप्तमी पुरा ॥ २६१ ॥ एवं च स्थिते—जरा रुजा मृतिश्चेति, खलता च कुरूपता । दरिद्रता दुर्भगता, उद्दिष्टाः क्रमशो यथा ॥ २६२ ॥ एता या यत्प्रयुक्ता वा, यद्वीर्या यत्परिच्छदाः । चेष्टन्ते यस्य बाधायै, निर्दिष्टाः क्रमशस्तथा ॥२६३॥ युग्मम् । एताश्चैवं विवल्गन्ते, विपक्षक्षयमुच्चकैः । कुर्वाणा भवचक्रेऽत्र, लोकपीडनतत्पराः ॥ २६४ ॥ प्रकर्षेणोदितं माम!, किमासां विनिवारकाः । लोकपाला न विद्यन्ते, नगरेऽत्र नृपादयः? ॥ २६५ ॥ विमर्शेनोदितं वत्स!, नैताः शक्या नृपादिभिः । निवारयितुमित्यत्र, कारणं ते निवेदये ॥ २६६ ॥ ये केचिद्वीर्यभूयिष्ठाः, प्रभवो भुवनोदरे । तेष्वपि प्रभवन्त्येताः, सर्वेषु प्रसभं मुदा ॥ २६७ ॥ सर्वत्र विचरन्तीनामासामुद्दामलीलया । गजानामिव मत्तानां, नास्ति मल्लो जगत्त्रये ॥२६७॥ स्वप्रयोजनवीर्येण, विलसन्तीर्निरङ्कुशं । को नाम भुवने साक्षादेताः स्खलयितुं क्षमः? ॥२६८॥ प्रकर्षेणोक्तं—माम! तत्किं पुरुषेण न यतितव्यमेवामूषां निराकरणे?, विमर्शेनोक्तं—वत्स! निश्चयतो निराकरणे न यतितव्यमेव, यतो न

शक्यन एवावश्यंभाविनीनामासां निराकरणं कर्तुं, विमृश्यकारी च पुरुषः कथमशक्येऽर्थे प्रवर्तते ?, न हि कर्मपरिणामकालपरिणतिस्वभावलोकस्थितिभवितव्यतादिसंपूर्णकारणसामग्रीबलप्रवर्तितानामवश्यमाविर्भवन्तीनाममूषामन्येषां वा कार्यविशेषाणां निराकरणे यतमानः पुरुषः प्रयासादृते कश्चिदर्थं पुष्णाति, प्रकर्षः प्राह—माम ! पूर्वं भवता प्रत्येकमासां जरारुजादीनामपराण्येवान्तरङ्गबहिरङ्गाणि प्रवर्तकानि निर्दिष्टानि तत्कथमिदानीं कर्मपरिणामादीनि प्रवर्तकत्वेनोच्यन्ते ?, विमर्शेनोक्तं—तानि विशेषकारणानीतिकृत्वा प्राधान्येनोक्तानि, परमार्थतस्तु यथानिर्दिष्टकर्मपरिणामादिकारणकलापव्यापारमन्तरेण न नयननिमेषोन्मेषमात्रमपि कार्यजातं किञ्चिज्जगति जायते, प्रकर्षः प्राह—माम ! यद्येवं ततः पुरुषेण किमात्मनो निजवर्गाणस्य वाऽमूरभ्यर्णवर्तिनीरापतन्तीरुपलक्ष्य न कर्तव्य एव कश्चिदासां निवारणोपायः ? किं नान्वेषणीया एव वैद्यौषधमन्त्रतन्त्ररसायनचतुर्विधदण्डनीत्यादयः समुपस्थितजरारुजामृत्यादिनिर्घातनोपायाः ? किं सर्वथा पादप्रसारिकैवात्र श्रेयस्करी ? किमकिञ्चित्कर एव पुरुषो हेयोपादेयहानोपादाने ?, ननु प्रत्यक्षविरुद्धमिदं, यतः प्रवर्तन्त एव पुरुषा हिताहितयोरवाप्तिनिराकरणकामतया, प्रवृत्ताश्चोपायेन प्राप्नुवन्ति हितमर्थं, निराकुर्वन्ति चोपस्थितमप्युपायत एवाहितमिति, विमर्शेनोक्तं—वत्स ! विश्रब्धो भव मोत्तालतां यासीः परामृश वचनैदम्पर्यं, निश्चयतो हि मयोक्तं यथा—मा प्रवर्तिष्ट पुरुषः, व्यवहारतस्तु तत्प्रवृत्तिं को वारयति ?, पुरुषेण हि सर्वत्र पुरुषापराधमलः सदनुष्ठाननिर्मलजलेन क्षालनीयः, तदर्थं हि तत्प्रवृत्तिः, यतो नाकलयत्यसौ तदा भाविकार्यपरिणामं, ततो व्यवहारतः सर्वहेयोपादेयहानोपादानसाधनं समाचरत्येव । किं च—चिन्तितं चानेन—यदुताहं न प्रवर्ते तथाप्यसावप्रवर्तमानो नासितुं लभते, यतः कर्मपरिणामादिकारणसामग्र्या वेतालाविष्ट इव हठात्प्रवर्तत एव, न चाकिञ्चित्करः पुरुषः, किं तर्हि ?, स एव प्रधानः, तदुपकरणत्वात्कर्मपरिणामादीनां, न च पादप्रसारिका श्रेयस्करी, व्यवहारतः पुरुषप्रवृत्तेर्हिताहितनिर्वर्तनाप-

वर्तनक्षमत्वात्, निश्चयतस्तु निःशेषकारणकलापपरिणामसाध्यत्वात् कार्याणां, अन्यथा पूर्वमाकलिते पुरुषेण वैपरीत्येन तु परिणते पश्चात्प्रयोजने न विधेयौ हर्षविषादौ समालम्बनीयो निश्चयाभिप्रायो यथेत्थमेवानेन विधातव्यमितिभावनया विधेयो मध्यस्थभावः, न चैतच्चिन्तनीयं—यद्येवमहमकरिष्यं ततो नेत्थमभविष्यदिति, यतस्तथाऽवश्यंभाविनः कार्यस्य कुतोऽन्यथाकरणं ?, नियता हि निश्चयाकूतेन नियतकारणसामग्रीजन्या च सकलकालं तथैवानन्तकेवलिज्ञानगोचरीभूता च समस्ताऽपि जगति बहिरङ्गान्तरङ्गकार्यपर्यायमाला, सा यया परिपाट्या व्यवस्थिता यैश्च कारणैराविर्भावनीया तयैव परिपाट्या तान्येव च कारणान्यासाद्याविर्भवति, कुतस्तस्यामन्यथाभावः ?, अतोऽतीतचिन्ता मोहविलसितमेव । व्यवहारतोऽपि हितावाप्तयेऽहितनिषेधाय च प्रवर्तमानेन पुरुषेण सुपर्यालोचितकारिणा नानैकान्तिकानात्यन्तिके तत्साधने भेषजमन्त्रतन्त्ररसायनदण्डनीत्यादौ महानादरो विधेयः, अपि त्वैकान्तिकात्यन्तिकं तत्साधनमन्वेषणीयं, सर्वथा सदनुष्ठानोपायेन तत्र यातव्यं यत्रैते जरारुजादयः सर्वेऽप्युपद्रवा न प्रभवन्ति । प्रकर्षः प्राह—माम ! कुत्र पुनरेते न प्रभवन्ति ?, विमर्शेनोक्तं—अस्ति सन्नगरी रम्या, निर्वृतिर्नाम विश्रुता । अनन्तानन्दसन्दोहपरिपूर्णा निरत्यया ॥ १ ॥ तस्यां न प्रभवन्त्येव, संस्थितानामुपद्रवाः । जरारुजाद्याः सा यस्मात्सर्वोपद्रववर्जिता ॥ २ ॥ तस्यां च गन्तुकामेन, सेव्याः सद्वीर्यवृद्धये । पुरुषेण सदा तत्त्वबोधश्रद्धानसत्क्रियाः ॥ ३ ॥ ततो विवृद्धवीर्याणां, तस्या मार्गेऽपि तिष्ठताम् । तनूभवन्ति दुःखानि, वर्धते सुखपद्धतिः ॥ ४ ॥ इदं तु नगरं भद्र !, भवचक्रं चतुर्विधम् । सदैवामुक्तमेताभिस्तथाऽन्यैर्भूर्युपद्रवैः ॥ ५ ॥ को वाऽत्र गणयेत्तात !, क्षुद्रोपद्रवकारिणाम् । पुरे संख्यानमप्येषां, स्वस्थानमिदमीदृशम् ॥ ६ ॥ प्रकर्षः प्राह मामेदं, नगरं ननु सर्वथा । एवं कथयतो दुःखबहुलं कथितं त्वया ॥ ७ ॥ साधु साधूदितं वत्स !, बुद्धं वत्सेन भावितम् । विज्ञातं भवचक्रस्य, सारमित्याह मातुलः ॥ ८ ॥ प्रकर्षः प्राह यद्येवं, ततोऽत्र नगरे जनाः ।

रमन्तः किं मुनिर्विण्णाः, किं वा नेति निवेद्यताम् ॥ ९ ॥ विमर्शेनोदितं वत्स!, निर्वेदो नास्ति देहिनाम् । अत्रापि वसतां नित्यं, तत्राकर्णय कारणम् ॥ १० ॥ य एते कथितास्तुभ्यं, महामोहादिभूभुजः । अन्तरङ्गाः स्ववीर्येण, वशीकृतजगत्त्रयाः ॥ ११ ॥ एतेषां कौशलं किञ्चिदपूर्वं जनमोहने । विद्यते तद्वशेनैते, निर्विद्यन्ते न नागराः ॥ १२ ॥ एते हि चरटप्राया, दुःखदाः शत्रवोऽतुलाः । महामोहादयो वत्स!, भवचक्रनिवासिनाम् ॥ १३ ॥ तथापि प्रतिभासन्ते, तेषां मोहितचेतसाम् । यथैते सुहृदोऽस्माकं, वत्सलाः सुखहेतवः ॥ १४ ॥ इदं च नगरं वत्स!, दुःखसङ्घातपूरितम् । तथाप्यत्र स्थिता लोका, मन्यन्ते सुखसागरम् ॥ १५ ॥ निश्चिन्ता निर्गमोपाये, रमनेनात्र मोदिताः । निवसन्ति सदा तुष्टा, महामोहादिबान्धवैः ॥ १६ ॥ योऽपि निर्गमनोपायं, भवचक्रात्प्रभाषते । तस्याप्येतेऽपि मन्यन्ति, यथैष सुखबाधकः ॥ १७ ॥ तत्र तत्र प्रकुर्वन्ति, महायत्नेन सर्वथा । येनात्रैव भवत्येषां, वासः पापेन कर्मणा ॥ १८ ॥ तदेवं निजवीर्येण, महामोहादिशत्रुभिः । कोडीकृता न जानन्ति, किञ्चिदेते तपस्विनः ॥ १९ ॥ शब्दादिसुखसम्भोगं, तुच्छं दुःखात्मकं सदा । एते मनसि मन्यन्ते, यथेदममृतोपमम् ॥ २० ॥ ततोऽमी यावदेतेषां, प्रभवो वत्स! भूभुजः । भवचक्रे न निर्विण्णास्तावल्लोकाः कदाचन ॥ २१ ॥ प्रकर्षः प्राह यद्येवं, ततोऽमीषां दुरात्मनाम् । सदोन्मत्तकतुल्यानां, किमस्माकं विचिन्तया? ॥ २२ ॥ केवलं माम! सर्वेषां, महामोहादिभूभुजाम् । दर्शितं भवचक्रेऽत्र, मम वीर्यं त्वया स्फुटम् ॥ २३ ॥ यस्त्वसौ वर्णितः पूर्वं, महामोहमहत्तमः । वर्यः कुदृष्टिपत्नीको, मिथ्यादर्शननामकः ॥ २४ ॥ तेन यद्भवचक्रेऽत्र, स्ववीर्येण विजृम्भितम् । तन्मेऽद्यापि त्वयाऽऽख्यातं, नापि संदर्शितं मम ॥ २५ ॥ ततोऽहं द्रष्टुमिच्छामि, श्रोतुं च गुणरूपतः । तद्वशीभूतलोकानां, चरितं माम! साम्प्रतम् ॥ २६ ॥ विमर्शः प्राह नागरं, समस्तमिदमञ्जसा । प्रायेण वर्तते तस्य, वशे नास्त्यत्र संशयः ॥ २७ ॥ तथाहि—यदिदं वर्णितं तेऽत्र, मया पुरचतुष्टयम् ।

तत्र सर्वत्र विद्यन्ते, लोकास्तद्वशवर्तिनः ॥ २८ ॥ तथापि ये विशेषेण, तस्याज्ञाकारिणो जनाः । तेषां स्थानानि ते भद्र!, दर्शयामि परिस्फुटम् ॥ २९ ॥ ततश्चोर्ध्वं विशेषेण, कृत्वाऽसौ दक्षिणं करम् । तर्जन्या दर्शयत्येवं, तानि स्थानानि यत्नतः ॥ ३० ॥ अमूनि मानवावासे, दृश्यन्ते यानि सुन्दर!। अभ्यन्तरपुराणीह, षडवान्तरमण्डले ॥ ३१ ॥ एतानि वत्स! लोकानां, तेषां स्थानानि लक्षय। मिथ्यादर्शनसंज्ञेन, ये वशीकृतचेतसः ॥ ३२ ॥ प्रकर्षेणोक्तं—माम! किन्नामकान्येतानि पुराणि? किमभिधाना वैतेषु लोकाः प्रतिवसन्ति?, विमर्शेनोक्तं—वत्स! समाकर्णय—एकमत्र पुरे तावन्नैयायिकमितीरितम्। **नैयायिकाश्च** गीयन्ते, ते जना येऽत्र संस्थिताः ॥ ३३ ॥ अन्यद्वैशेषिकं नाम, पुरमत्राभिधीयते। **वैशेषिकाश्च** ते लोका, येऽस्य मध्ये व्यवस्थिताः ॥३४॥ तथाऽपरं जनैः **सांख्यं**, पुरमत्र प्रकाशितम्। **सांख्याश्च** ते विनिर्दिष्टा, लोका येऽत्र वसन्ति भोः ॥ ३५॥ इहापरं पुनर्बौद्धं, पुरमाख्यायते जनैः। प्रसिद्धा **बौद्धसंज्ञाश्च**, ते जना येऽस्य मध्यगाः ॥ ३६ ॥ **मीमांसकपुरं** नाम, तथाऽन्यत्परिकीर्तितम् । **मीमांसकाश्च** गीयन्ते, ते लोका येऽत्र संस्थिताः ॥३७॥ **लोकायतमिति** प्रोक्तं, पुरमत्र तथाऽपरम्। **बार्हस्पत्याश्च** ते लोका, ये वास्तव्याः पुरेऽत्र भोः! ॥ ३८ ॥ तदेतेषु पुरेषूच्चैर्येऽमी लोकाः प्रकीर्तिताः। ते विशेषेण कुर्वन्ति, मिथ्यादर्शनशासनम् ॥ ३९ ॥ यच्च प्रोक्तं मया पूर्वं, सभार्यस्य विजृम्भितम् । तस्य सर्वं तदेतेषु, लोकेषु ननु दृश्यते ॥ ४० ॥ प्रकर्षेणोक्तं—षडत्र यानि श्रूयन्ते, मण्डले लोकवार्तया । दर्शनानि किमेतानि, तान्याख्यातानि मे त्वया? ॥ ४१ ॥ विमर्शेनोदितं वत्स!, कथ्यते ते परिस्फुटम्। एतानि पञ्च तान्येव, मीमांसकपुरं विना ॥ ४२ ॥ अर्वाक्कालिकमेतद्धि, मीमांसकपुरं मतम्। तेन दर्शनसंख्यायामेतल्लोकैर्न गण्यते ॥ ४३ ॥ तथाहि—जैमिनिर्वेदरक्षार्थं, दूषणोद्धारणेच्छया । चकार किल मीमांसां, दृष्ट्वा तीर्थिकविप्लवम् ॥ ४४ ॥ तस्मादेतानि पञ्चैव, मीमांसकपुरं विना । लोकैर्दर्शनसंख्यायां, गण्यन्ते नात्र संशयः

॥ ४५ ॥ प्रकर्षः प्राह यद्येवं, ततो ब्रूहि क वर्तते । तत्पुरं माम! यल्लोकैर्गीयते षष्ठदर्शनम्? ॥ ४६ ॥ विमर्शेनाभिहितं—यदिदं
दृश्यतेऽत्रैव, विवेकवरपर्वते । निर्मलं शिखरं तुङ्गमप्रमत्तत्वनामकम् ॥ ४७ ॥ विस्तीर्णमिदमत्यर्थमत्रैव च निवेशितम् । पुरं लोकोत्तरं
वत्स!, तज्जैनमभिधीयते ॥ ४८ ॥ तस्य ते कथयिष्यामि, ये गुणाः शेषजित्वराः । तथापि लोकरूढ्यैव, षष्ठं हि तदुदाहृतम् ॥ ४९ ॥
अन्यच्च तत्र ये लोकास्तेषामेष महत्तमः । न बाधकः प्रकृत्यैव, मिथ्यादर्शननामकः ॥ ५० ॥ प्रकर्षेणोक्तं—अधःस्थितेषु बाध्यन्ते, पुरेषु
यद्यमी जनाः । शिखरस्थे न बाध्यन्ते, माम! किं तत्र कारणम्? ॥ ५१ ॥ विमर्शेनोक्तं—अस्त्यत्र निर्वृतिर्लोके, नगरी सुमनोहरा । सा च
मुक्तेरतिकान्ता, महामोहादिभूभुजाम् ॥ ५२ ॥ निर्द्वन्द्वानन्दसंपूर्णा, सततं निरुपद्रवा । एभिश्चाकर्णिता सर्वैः, सा लोकैः पुरवासिभिः
॥ ५३ ॥ ततो लोकायतं मुक्त्वा, ये शेषपुरवासिनः । नगरीं गन्तुमिच्छन्ति, तामेते वत्स! निर्वृतिम् ॥ ५४ ॥ एते च सर्वे तां गन्तुम-
मार्गैर्भूरिपथैः । स्वकल्पितैः प्रवाञ्छन्ति, परस्परविरोधिभिः ॥ ५५ ॥ ततश्च—अमीभिर्वत्स! भूरिष्ठैर्ये मार्गाः परिकल्पिताः । निर्वृतेः
प्रापकास्ते हि, न घटन्ते सुयुक्तितः ॥ ५६ ॥ विवेकपर्वतोत्तुङ्गशिखरस्थितसत्पुरे । वसद्भिर्यः पुनर्दृष्टः, सन्मार्गोऽतिमनोहरः ॥ ५७ ॥
स निर्वृतिं नयत्येव, लोकं नास्त्यत्र संशयः । पक्षपातविमुक्तेन, मया तेनेदमुच्यते ॥ ५८ ॥—यथाऽमी बाधिता लोका, येऽधःस्थपुरव-
र्तिनः । मिथ्यादर्शनसंज्ञेन, न गिरिस्थे महापुरे ॥ ५९ ॥ यतः—तन्मिथ्यादर्शनस्यैव, माहात्म्यं स्फुटमुच्यते । यदेते न विजानन्ति,
सन्मार्गं निर्वृतेर्जनाः ॥ ६० ॥ दिङ्मूढा इव मन्यन्ते, कुमार्गमपि तत्त्वतः । सन्मार्ग इति यच्चैते, तत्तस्यैव विजृम्भितम् ॥ ६१ ॥ ये
तेतो शिखरे लोका, वर्तन्ते वत्स! सत्पुरे । एषामेतद् द्वयं नास्ति, तेनेमे तस्य दूरगाः ॥ ६२ ॥ एतानि च पुराण्यत्र, प्रत्यासन्नानि तेन
ते । दर्शितानि मया वत्स!, नेयत्ता परिकीर्तिता ॥ ६३ ॥ किं तर्हि?—उपलक्षणमेतानि, विज्ञातव्यानि भावतः । मिथ्यादर्शनवश्याना-

मन्येपामपि तादृशम् ॥ ६४ ॥ यतः—यान्येतानि पुराण्यत्र, दृश्यन्ते वत्स! भूतले । नान्यत्र देशकालेपु, स्थानकानि बहूनि च ॥ ६५ ॥ एतत्तु शिखरस्थायि, सत्पुरं भद्र! सर्वदा । अप्रच्युतमनुत्पन्नं, शाश्वतं परमार्थतः ॥ ६६ ॥ प्रकर्षेणोदितं माम!, येऽमीभिः परिकल्पिताः । स्वबुद्ध्या निर्वृतेर्मार्गा, लोकैः पुरनिवासिभिः ॥ ६७ ॥ तानहं श्रोतुमिच्छामि, प्रत्येकं सकुतूहलः । ततो मेऽनुग्रहं कृत्वा, भवानाख्यातुमर्हति ॥ ६८ ॥ विमर्शः प्राह यद्येवं, ततः कृत्वा समाहितम् । चेतस्त्वं वत्स! बुध्यस्व, मार्गान्वक्ष्ये परिस्फुटम् ॥ ६९ ॥—तत्र नैयायिकैस्तावदेष कल्पितो वत्स! निर्वृतिमार्गः, यदुत—प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वपरिज्ञानान्निःश्रेयसाधिगमः । तत्रार्थोपलम्भहेतुः प्रमाणं, तच्चतुर्धा, तद्यथा—प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि । तत्र प्रत्यक्षम्—इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षं, तत्पूर्वकं त्रिविधमनुमानं, तद्यथा—पूर्ववच्छेषवत्सामान्यतोदृष्टं च, तत्र पूर्ववत्कारणात्कार्यानुमानं, यथा मेघोन्नतेर्भविष्यति वृष्टिरिति, शेपवत्कार्यात्कारणानुमानं, यथा विशिष्टान्नदीपूरदर्शनादुपरि वृष्टो देव इति, सामान्यतोदृष्टं नाम यथा देवदत्तादौ गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्य दिनकरेऽपि सा गतिपूर्विकैव समधिगम्यते, प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानं, यथा गौस्तथा गवय इति, आप्तोपदेशः शब्द आगम इत्यर्थः । तदेवमिदं चतुर्विधं प्रमाणमभिहितं । तथाऽऽत्माशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोपप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयं । किं स्यादित्यनवधारणात्मकः प्रत्ययः संशयः, किमयं स्थाणुः स्याद्युत पुरुप इति । येन प्रयुक्तः प्रवर्तते तत्प्रयोजनं । अविप्रतिपत्तिविपयापन्नो दृष्टान्तः । सिद्धान्तश्चतुर्विधः, तद्यथा—सर्वतन्त्रसिद्धान्तः प्रतितन्त्रसिद्धान्तः अधिकरणसिद्धान्तः अभ्युपगमसिद्धान्तश्चेति । प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः । संशयादूर्ध्वं भवितव्यताप्रत्ययस्तर्कः, यथा भवितव्यमत्र स्थाणुना पुरुपेण वेति । संशयतर्काभ्यामूर्ध्वं

निश्चयनः प्रनयो निर्णयः, यथा पुरुष एवायं स्थाणुरेव वा । तिस्रः कथाः—वादजल्पवितण्डाः, तत्र शिष्याचार्ययोः पक्षप्रतिपक्षपरिग्रहेणाभ्यासख्यापनाय वादकथा, विजिगीषुणा सार्धं छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः, स एव स्वपक्षप्रतिपक्षस्थापनाहीनो वितण्डा। अनैकान्तिकाद्यो हेत्वाभासाः । नवकम्बलो देवदत्त इत्यादि छलं । दूषणाभासास्तु जातयः । निग्रहस्थानानि पराजयवस्तूनि, तद्यथा-प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासः हेत्वन्तरं अर्थान्तरं निरर्थकं अविज्ञातार्थमपार्थकं अप्राप्तकालं न्यूनमधिकं पुनरुक्तं अननुभाषणं अप्रतिज्ञानं अप्रतिभा कथाविक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगः अपसिद्धान्तो हेत्वाभासाश्चेति निग्रहस्थानानि । तदेते प्रमाणादयः षोडश पदार्था नैयायिकदर्शनसमासः ॥ वैशेषिकैः पुनरयं वत्स! परिकल्पितो निर्वृतिनगरीगमनमार्गः, यदुत—द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां तत्त्वपरिज्ञानान्निःश्रेयसाधिगमः । स हि निर्वृतिर्निःश्रेयसरूपा । तत्र पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मनो इति नव द्रव्याणि । रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारगुरुत्वद्रवत्वस्नेहवेगशब्दाः पञ्चविंशतिर्गुणाः । उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति पञ्च कर्माणि । सामान्यं द्विविधं—परमपरं च, तत्र परं सत्तालक्षणं, अपरं द्रव्यत्वादीति । नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः । अयुतसिद्धानामाधाराधेयभूतानां यः सम्बन्ध इहप्रत्ययहेतुः स समवायः। लैङ्गिकप्रत्यक्षे द्वे एव प्रमाणे। इति वैशेषिकदर्शनसमासार्थः। सांख्यैस्तु वत्स! निजबुद्ध्या परिकल्पितोऽयं निर्वृतिनगर्याः पन्थाः, यदुत—पञ्चविंशतितत्त्वपरिज्ञानान्निःश्रेयसाधिगमः । तत्र त्रयो गुणाः—सत्त्वं रजस्तमश्च । तत्र प्रसादलाघवप्रणयानभिष्वङ्गाद्वेषप्रतीतयः कार्यं सत्त्वस्य, शोकतापभेदस्तम्भोद्वेगापद्वेषाः कार्यं रजसः, मरणसादनवीभत्सदैन्यगौरवाणि तमसः कार्यं । ततः सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, सैव प्रधानमित्युच्यते । प्रकृतेश्च महानाविर्भवति, बुद्धि-

रित्यर्थः । बुद्धेश्चाहङ्कारः । ततोऽहङ्कारादेकादशेन्द्रियाणि, तद्यथा—पञ्च बुद्धीन्द्रियाणि स्पर्शनरसनघ्राणचक्षुःश्रोत्ररूपाणि पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थलक्षणानि मनश्चाविर्भवति । तथा तत एवाहङ्कारात्तमोबहुलात्पञ्च तन्मात्राणि स्पर्शरसरूपगन्धशब्दलक्षणान्याविर्भवन्ति । तेभ्यश्च पृथिव्यादीनि पञ्च महाभूतानि । तदेषा चतुर्विंशतितत्त्वात्मिका प्रकृतिः । तथा परः पुरुषश्चैतन्यस्वरूपः, स चानेको जन्ममरणकरणानां नियमदर्शनाद्धर्मादिषु प्रवृत्तिनानात्वाच्च । प्रकृतिपुरुषयोश्चोपभोगार्थः संयोगः पङ्ग्वन्धयोरिव, उपभोगश्च शब्दाद्युपलम्भो गुणपुरुषान्तरोपभोगश्च । प्रत्यक्षानुमानागमाः प्रमाणानि । इति **सांख्यदर्शनसंक्षेपार्थः** ॥ बौद्धैः पुनर्भद्र ! परिकल्पितेयं निर्वृतिनगरीवर्तनी, यदुत—द्वादशायतनानि, तद्यथा—पञ्चेन्द्रियाणि पञ्च शब्दादयो मनो धर्मायतनं च, धर्मास्तु सुखादयो विज्ञेयाः । प्रत्यक्षानुमाने द्वे एव प्रमाणे । इति **बौद्धदर्शनसमासार्थः** ॥ अथवा **वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकभेदा**च्चतुर्विधा बौद्धा भवन्ति, तत्र वैभाषिकमतमिदं, यदुत—क्षणिकं वस्तु, तद्यथा—जातिर्जनयति स्थितिः स्थापयति जरा जर्जरयति विनाशो नाशयति । तथाऽऽत्माऽपि तथाविध एव पुद्गलश्चासावभिधीयते ॥ सौत्रान्तिकमतं पुनरिदं—रूपवेदनाविज्ञानसंज्ञासंस्काराः सर्वशरीरिणामेते पञ्च स्कन्धा विद्यन्ते, न पुनरात्मा । त एव हि परलोकगामिनः । तथा क्षणिकाः सर्वे संस्काराः स्वलक्षणं परमार्थतः । अन्यापोहः शब्दार्थः । सन्तानोच्छेदो मोक्ष इति ॥ योगाचारमतं त्विदं—विज्ञानमात्रमिदं भुवनं, न विद्यते बाह्यार्थः । वासनापरिपाकतो नीलपीतादिप्रतिभासाः । आलयविज्ञानं सर्ववासनाधारभूतं । आलयविज्ञानविशुद्धिरेव चापवर्ग इति ॥ माध्यमिकदर्शने तु—सर्वशून्यमिदं, स्वप्नोपमः प्रमाणप्रमेयप्रविभागः । 'मुक्तिस्तु शून्यतादृष्टिस्तदर्थं शेपभावना' इति **बौद्धविशेषाणां मतसंक्षेपार्थः** ॥ लोकायतैः पुनर्वत्स ! सा निर्वृतिनगरी नास्तीति प्रख्यापितं लोके, यतोऽमी ब्रुवते—नास्ति निर्वृतिर्नास्ति जीवो नास्ति परलोको नास्ति पुण्यं नास्ति पापमित्यादि ।

किं तर्हि ?, पृथिव्यापस्तेजो वायुरिति तत्त्वानि, तत्समुदाये शरीरेन्द्रियविषयसंज्ञा । तेभ्यश्चैतन्यं मद्याङ्गेभ्यो मदशक्तिवत् । जलबुद्बुद-
वज्जीवाः । प्रवृत्तिनिवृत्तिसाध्या प्रीतिः पुरुषार्थः, स च काम एव, नान्यो मोक्षादिः । तस्मान्नान्यत्पृथिव्यादिभ्यस्तत्त्वमस्ति, दृष्टहान्य-
दृष्टकल्पनासम्भवादिति । प्रत्यक्षमेव चैकं प्रमाणमिति **लोकायतमतसमासः** ॥ मीमांसकानां पुनरेष मार्गः, यदुत—वेदपाठानन्तर
धर्मजिज्ञासा कर्तव्या । यतश्चैवं ततस्तस्य निमित्तपरीक्षा । निमित्तं च चोदना । यत उक्तं—"चोदनालक्षणोऽर्थो धर्मः" । चोदना च क्रि-
यायां प्रवर्तकं वचनमाहुर्यथा—'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादि । तेन धर्मो लक्ष्यते, नान्येन प्रमाणेन, प्रत्यक्षादीनां विद्यमानो-
पलम्भनत्वादिति । प्रत्यक्षानुमानशब्दोपमानार्थापत्त्यभावाः षट् प्रमाणानि । इति **मीमांसकमतसमासः** ॥ अमीभिः पुनर्वत्स! विवे-
कमहापर्वतारूढैरप्रमत्तत्वशिखरस्थितैर्जैनपुरनिवासिभिर्जैनलोकैरयं दृष्टो निर्वृतिनगरीगमनमार्गः, यदुत—जीवाजीवास्रवबन्धसंवरनिर्ज-
रामोक्षास्तत्त्वं । तत्र सुखदुःखज्ञानादिपरिणामलक्षणो जीवः । तद्विपरीतस्त्वजीवः । मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतवः
स आस्रवः । आस्रवकार्यं बन्धः । आस्रवविपरीतः संवरः । संवरफलं निर्जरा । निर्जराफलं मोक्ष इत्येते सप्त पदार्थाः । तथा विधिप्र-
तिषेधानुष्ठानपदार्थाविरोधश्च । अत्र जैनदर्शने स्वर्गकेवलार्थिना तपोध्यानादि कर्तव्यं 'सर्वे जीवा न हन्तव्या' इति वचनात् 'सततस-
मितिगुप्तिशुद्धा क्रिया असपत्नो योग' इति वचनात् । उत्पादविगमध्रौव्ययुक्तं सत् । एकं द्रव्यमनन्तपर्यायमर्थ इति । प्रत्यक्षपरोक्षे द्वे एव
प्रमाणे । इति **जैनमतस्य दिग्दर्शनमात्रम्** ॥ तत्रैते प्रथमास्तावच्चत्वारो वत्स! वादिनः । नैयायिकादयो नैव, निर्वृतेर्मार्गदर्शकाः
॥ १ ॥ यतः—एकान्तनित्यमिच्छन्ति, पुरुषं तत्र गामुकम् । सर्वत्रगं च वाञ्छन्ति, तथाऽन्ये क्षणनश्वरम ॥ २ ॥ नित्यश्चासौ कथं
गच्छेत्तस्यागविचलो यतः । सर्वत्रगश्च यो भद्र!, स क गच्छेत्कुतोऽपि वा ? ॥ ३ ॥ नश्वरोऽपि विनष्टत्वान्न तस्यां गन्तुमर्हति । तस्मा-

''र्णितं च मया पुरा । वस्तु किञ्चित्समस्तानां, दुःखदं बाह्यदेहिनाम् ॥ १ ॥ चित्तवृत्तिमहाटव्यां, तत्सर्वमिह संस्थिताः । प्रलीनं वत्स! ''पश्यन्ति, नूनमेते महाधियः ॥२॥ युग्मम् सा सर्वोपद्रवैर्मुक्ता, श्वेता रत्नौघपूरिता । एतेषां ध्यानयोगेन, चित्तवृत्तिः प्रभासते ॥३॥ तदेते ''ते महात्मानो, ये मया वत्स! वर्णिताः । पूर्वं तपोधनाः सम्यक्, पश्य विस्फारितेक्षणः ॥ ४ ॥ प्रकर्षेणोक्तं—चारु चारु कृतं माम!, विहितो मदनुग्रहः । जनितः धूतपापोऽहमेतेषां दर्शनात्त्वया ॥ ५ ॥ कृतं मानसनिर्वाणं, विहितः पटुलोचनः । आनन्दामृतसेकेन, गात्रं निर्वापितं च मे ॥ ६ ॥ केवलं दर्शनीयोऽसौ, ममाद्यापि ननु त्वया । यो वर्णितो महावीर्यो, माम! सन्तोषभूपतिः ॥ ७ ॥ विमर्शेनोक्तं—य एष दृश्यते वत्स!, सद्‌दृष्टेः सुखदायकः । शुभ्रश्चित्तसमाधानो, नाम विस्तीर्णमण्डपः ॥ ८ ॥ सर्वेषां वल्लभोऽमीषां, जनानां पुरवासिनाम् । स सन्तोषमहाभूपो, नूनमत्र भविष्यति ॥ ९ ॥ प्रकर्षः प्राह यद्येवं, ततोऽत्रैव प्रविश्यताम् । एवं भवतु वत्सेति, बभाषे तस्य मातुलः ॥ १० ॥ प्रविश्य चोचिते देशे, ताभ्यां दृष्टः स मण्डपः । निजप्रभावविक्षिप्तजनसन्तापसुन्दरः ॥ ११ ॥ तत्र च—राजमण्डलमध्यस्थं, दीप्तिनिर्धूततामसम् । वेष्टितं भूरिलोकेन, सच्चित्तानन्ददायकम् ॥ १२ ॥ विशालवेदिकारूढमुपविष्टं वरासने । दत्तास्थानं नरेन्द्रं तौ, पश्यतः स्म चतुर्मुखम् ॥ १३ ॥ ततः प्रकर्षस्तं वीक्ष्य, मनसा हर्षनिर्भरः । मनाक् संजातसन्देहो, मातुलं प्रत्यभाषत ॥ १४ ॥ अहो रम्यमिदं जैनं, पुरं यत्रेदृशः प्रभुः । ईदृक्षो मण्डपो लोका, वास्तव्या यत्र चेदृशाः ॥ १५ ॥ एवं च स्थिते—यत्रेदृशं पुरं माम!, विवेकवरपर्वते । किं सोऽयं भवचक्रेऽत्र, वर्तते दोषपूरिते ॥ १६ ॥ विमर्शेनोदितं वत्स!, यस्मिन्नेष महागिरिः । वर्तते तदहं वक्ष्ये, स्थानमस्य निशामय ॥ १७ ॥ चित्तवृत्तिमहाटव्यां, वर्तते परमार्थतः । भवचक्रे तु विद्वद्भिरुपचारेण कथ्यते ॥ १८ ॥ यतोऽत्र विद्यते वत्स!, सल्लोकपरिपूरितम् । अन्तरङ्गं सुविस्तीर्णं, पुरं सात्त्विकमानसम् ॥ १९ ॥ तत्रायं संस्थितो वत्स!, विवेकवरप-

चित्तसमाधानमण्डपः
संतोषभूपः

सात्त्विकपुरव०

वेतः । आधाराधेयसम्बन्धस्तेनैवं परिकीर्तितः ॥ २० ॥ प्रकर्षेणोदितं—माम ! यद्येवं ततो यदिदमस्य पर्वतस्याधारभूतं सात्त्विकमानसं पुरं ये च तत्सेविनो बहिरङ्गलोकाः यश्चायं विवेकमहागिरिः यच्चेदमप्रमत्तशिखरं यच्चादो जैनं पुरं ये चात्र स्थिता बहिरङ्ग-जनाः यश्चायं चित्तसमाधानमहामण्डपो या चेयं वेदिका यच्चेदं सिंहासनं यश्चायं नरेन्द्रो यश्चायमस्य परिवारः तदिदं सर्वं मम जन्मापूर्वं ततो ममानुग्रहधिया प्रत्येकं विशेषतस्तद्वर्णयितुमर्हति मामः, विमर्शेनोक्तं—वत्स! यद्येवं ततः समाकर्णय—यदिदं पर्वता-धारं, पुरं सात्त्विकमानसम् । तदन्तरङ्गरत्नानां, सर्वेषामाकरो मतम् ॥ २१ ॥ अनेकदोषपूर्णेऽपि, भवचक्रे व्यवस्थितम् । नेदं स्वरूपतो वत्स!, दोषसंश्लेषभाजनम् ॥ २२ ॥ अधन्या भवचक्रेऽत्र, वर्तमाना मनुष्यकाः । इदं स्वरूपतो वत्स!, न पश्यन्ति कदाचन ॥ २३ ॥ यानि निर्मलचित्तादिपुराण्यन्तरभूमिषु । अत्रैव प्रतिबद्धानि, तानि जानीहि भावतः ॥ २४ ॥ स कर्मपरिणामाख्यो, राजा नेदं महा-पुरम् । सभुक्तिकं ददात्येकं, महामोहादिभूभुजाम् ॥ २५ ॥ किं तर्हि?, स्वयमेव भुनक्तीदं, तथाऽन्यैर्वरभूमिपैः । शुभाशयादिभिर्वत्स!, भोजयेच्च सभुक्तिकम् ॥ २६ ॥ इदं हि जगतः सारमिदं च निरुपद्रवम् । इदमेव कृताह्लादं, बहिर्जनमनोहरम् ॥ २७ ॥ तदिदं ते समासेन, पुरं सात्त्विकमानसम् । निवेदितं मया वत्स!, शृणु चात्राधुना जनम् ॥ २८ ॥ ये लोका निवसन्त्यत्र, पुरे सात्त्विकमानसे । बहिरङ्गा भवन्त्येषां, शौर्यवीर्यादयो गुणाः ॥ २९ ॥ बहिरङ्गा जनास्ते हि, निवसन्त्यत्र सत्पुरे । पुरमाहात्म्यमात्रेण, गच्छन्ति विबु-धालये ॥ ३० ॥ अन्यच्च वसतामत्र, पुरे सात्त्विकमानसे । प्रत्यासन्नतया याति, विवेको दृष्टिगोचरं ॥ ३१ ॥ ततश्च—यथारोहन्त्यमुं लोका, विवेकवरपर्वतम् । ततो जैनं समासाद्य, पुरं यान्ति सुखास्पदम् ॥ ३२ ॥ एवं च स्थिते—पुरप्रभावमात्रेण, सर्वेऽत्र सुन्दरा जनाः । विवेकशिखरारूढाः, पुनः स्युरतिसुन्दराः ॥ ३३ ॥ किं च—अन्येषां पापिनां वत्स!, भवचक्रनिवासिनाम् । सदा न प्रति-

"वांहणेपु अवष्टभ्नन्ति परीपहेपु स्मयन्ते दिव्याद्युपसर्गेपु गूहयंति प्रवचनमालिन्यं वञ्चयन्तीन्द्रियधूर्त्तगणं लुभ्यन्ति तपश्चरणेपु गृध्यन्ति
"वैयावृत्याचरणेपु अभ्युपपद्यन्ते सद्ध्यानयोगेपु तृप्यन्ति परोपकारकरणेपु निघ्नन्ति प्रमादचौरवृन्दं बिभ्यति भवचक्रभ्रमणात् जुगुप्सन्ते
"विमार्गचारितां रमन्ते निर्वृतिनगरीगमनमार्गे उपहसन्ति विपयसुखशीलतां उद्विजन्ते शैथिल्याचरणात् शोचन्ति चिरन्तनदुश्चरितानि
"गर्हन्ते निजशीलस्खलितानि निन्दन्ति भवचक्रनिवासं आराधयन्ति जिनाज्ञायुवतिं प्रतिसेवन्ते द्विविधशिक्षाललनां ॥" तदेवं सर्वकार्याणि, महामोहादिभूभुजाम् । एतेपु माम! दृश्यन्ते, जैनेपु सुपरिस्फुटम् ॥ ६९॥ तत्कथं भवता प्रोक्तमेवं सति ममाग्रतः । यथैते दूरतस्त्यक्ता, महामोहादिशत्रुभिः ॥ ७० ॥ विमर्शेनोदितं वत्स!, य एते भवतोदिताः । महामोहादयस्तेऽन्ये, वत्सला जैनबान्धवाः ॥ ७१ ॥ एते हि द्विविधा वत्स!, महामोहादयो मताः । एकेऽरयोऽत्र जन्तूनामपरेऽतुलबान्धवाः ॥ ७२ ॥ यतः—प्रथमा भवचक्रेऽत्र, पातयन्ति सदा जनम् । अप्रशस्ततया तेषां, प्रकृतिः खलु तादृशी ॥ ७३ ॥ इतरे निर्वृतिं लोकं, नयन्ति निकटे स्थिताः । प्रशस्तास्ते यतस्तेषां, प्रकृतिः साऽपि तादृशी ॥ ७४ ॥ तदेते शत्रुभिस्त्यक्ता, बन्धुभिः परिवेष्टिताः । महामोहादिभिर्वत्स!, मोदन्ते जैनसज्जनाः ॥७५॥ एवं च—अमी सकलकल्याणभाजिनो जैनसज्जनाः । निवेदिता मया तुभ्यमधुना शृणु मण्डपम् ॥ ७६ ॥ अयं **चित्तसमाधानो**, मण्डपः सर्वदेहिनाम् । संप्राप्तः कुरुते सौख्यमतुलं निजवीर्यतः ॥ ७७ ॥ अस्यैव भूपतेर्नूनमास्थानार्थं विनिर्मितः । वेधसा त्रिजगद्बन्धोरादरादेष मण्डपः ॥ ७८ ॥ **नास्त्येव भवचक्रेऽत्र, सुखगन्धोऽपि सुन्दर!। यावच्चित्तसमाधानो, नैष संप्राप्यते जनैः** ॥७९॥ तदेष लेशतो वत्स!, वर्णितो वरमण्डपः । एषा **निःस्पृहता** नाम, वेदिका ते निवेद्यते ॥ ८० ॥ ये लोका वेदिकां वत्स!, स्मरन्त्येनां पुनः पुनः । तेषां शब्दादयो भोगाः, प्रतिभान्ति विषोपमाः ॥ ८१ ॥ न तेषु वर्तते चित्तं, क्षीयते कर्मसञ्चयः । जायन्ते निर्मलत्वेन,

